2. आगत्यापीह हरयो भविष्यन्ति निरर्थकाः ।
न हि युद्धेन वै लङ्का शक्या जेतुं सुरैरपि ।
इमां तु विषमां दुर्गां लङ्कां रावणपालिताम् ।
प्राप्यापि स महाबाहुः किं करिष्यति राघवः ।

3. वायुरप्यत्र न ज्ञातश्चरेदिति मतिर्मम ।

4. अचिन्त्यामद्‌भुताकारां दृष्ट्वा लङ्कां महाकपिः ।
आसीद्विषण्णो हृष्टश्च वैदेह्या दर्शनोत्सुकः ।

5. शुश्राव मधुरं गीतं त्रिस्थानस्वरभूषितम् ।
स्त्रीणां मदसमृद्धानां दिवि चाप्सरसामिव ।
शुश्राव काञ्चीनिनदं नूपुराणां च निस्वनम् ।
सोपाननिनदांश्चैव भवनेषु महात्मनाम् ।
आस्फोटितनिनादांश्च क्ष्वेलितांश्च ततस्ततः ।
शुश्राव जपतां तत्र मन्त्रान्रक्षोगृहेषु वै ।
स्वाध्यायनिरतांश्चैव यातुधानान्ददर्श सः ।
रावणस्तवसंयुक्तान्गर्जतो राक्षसानपि ।

6. मुदितप्रमदारत्नं राक्षसेन्द्रनिवेशनम् ।
वराभरणसंह्रादैः समुद्रस्वननिःस्वनम् ।
तद्राजगुणसंपन्नं मुख्यैश्चागरुचन्दनैः ।
महाजनैः समाकीर्णं सिंहैरिव महद्वनम् ।
भेरीमृदङ्गाभिरुतं शङ्खघोषनिनादितम् ।
नित्यार्चितं पर्वहुतं पूजितं राक्षसैः सदा ।
समुद्रमिव गम्भीरं समुद्रमिव निःस्वनम् ।

महात्मनो महद्वेश्म महारत्नपरिच्छदम् ।
महारत्नसमाकीर्णं ददर्श स महाकपिः ।
विराजमानं वपुषा गजाश्वरथसंकुलम् ।
लङ्काभरणमित्येव सोऽमन्यत महाकपिः ।

7. मही कृता पर्वतराजिपूर्णा शैलाः कृता वृक्षवितानपूर्णाः ।
वृक्षाः कृताः पुष्पवितानपूर्णाः पुष्पं कृतं केसरपत्रपूर्णम् ।

8. स गन्धस्तं महासत्त्वं बन्धुर्बन्धुमिवोत्तमम् ।
इत एहीत्युवाचेव तत्र यत्र स रावणः ।

9. इमानि मुखपद्मानि नियतं मत्तषट्पदाः ।
अम्बुजानीव फुल्लानि प्रार्थयन्ति पुनः पुनः ।

10. न तत्र काश्चित्प्रमदाः प्रसह्य वीर्योपपन्नेन गुणेन लब्धाः ।
न चान्यकामाऽपि न चान्यपूर्वा विना वरार्हां जनकात्मजां ताम् ।

11. मनो हि हेतुः सर्वेषामिन्द्रियाणां प्रवर्तने ।
शुभाशुभास्ववस्थासु तच्च मे सुव्यवस्थितम् ।
नान्यत्र हि मया शक्या वैदेही परिमार्गितुम् ।
स्त्रियो हि स्त्रीषु दृश्यन्ते सदा संपरिमार्गणे ।
यस्य सत्त्वस्य या योनिस्तस्यां तत्परिमार्ग्यते ।
न शक्या प्रमदा नष्टा मृगीषु परिमार्गितुम् ।

12. अनिर्वेदः श्रियो मूलमनिर्वेदः परं सुखम् ।

13. नमोऽस्तु रामाय सलक्ष्मणाय देव्यै च तस्यै जनकात्मजायै ।
नमोऽस्तु रुद्रेन्द्रयमानिलेभ्यो नमोऽस्तु चन्द्रार्कमरुद्गणेभ्यः ।

29

14. ततो मलिनसंवीतां राक्षसीभिः समावृताम् ।
उपवासकृशां दीनां निःश्वसन्तीं पुनः पुनः ।
ददर्श शुक्लपक्षादौ चन्द्ररेखामिवामलाम् ।
मन्दं प्रख्यायमानेन रूपेण रुचिरप्रभाम् ।

15. सपङ्कामनलङ्कारां विपद्मामिव पद्मिनीम् ।

16. दुःखेन बुबुधे सीतां हनुमाननलंकृताम् ।
संस्कारेण यथा हीनां वाचमर्थान्तरं गताम् ॥

அத். 21. [சுந். கா. 15—19]

1. इदं चिरगृहीतत्वाद्वसनं क्लिष्टवत्तरम् ।
तथापि नूनं तद्वर्णं तथा श्रीमद्यथेतरत् ।

2. कारुण्येनानृशंस्येन शोकेन मदनेन च ।

3. अस्या देव्या मनस्तस्मिंस्तस्य चास्यां प्रतिष्ठितम् ।
तेनेयं स च धर्मात्मा मुहूर्तमपि जीवति ।

4. यदि सीताऽपि दुःखार्ता कालो हि दुरतिक्रमः ।

5. यदि रामः समुद्रान्तां मेदिनीं परिवर्तयेत् ।
अस्याः कृते जगच्चापि युक्तमित्येव मे मतिः ।

6. नैषा पश्यति राक्षस्यो नेमान्पुष्पफलद्रुमान् ।
एकस्थहृदया नूनं राममेवानुपश्यति ।

7. धारयत्यात्मनो देहं तत्समागमकाङ्क्षिणी ।

8. दुष्करं कुरुते रामः हीनो यदनया प्रभुः ।
धारयत्यात्मनो देहं न दुःखेनावसीदति ।

9. मृणाली पङ्कदिग्धेव विभाति न विभाति च ।

10. शुष्यन्तीं रुदतीमेकां ध्यानशोकपरायणाम् ।
दुःखस्यान्तमपश्यन्तीं रामां राममनुव्रताम् ॥

அத். 22. [அங். கா. 18—22]

1. समक्षमिव कन्दर्पमपविद्धशरासनम् ।

2. अनुव्रतां राममतीव मैथिलीं प्रलोभयामास वधाय रावणः ।

3. मां दृष्ट्वा नागनासोरु गूहमाना स्तनोदरम् ।
कामये त्वां विशालाक्षि बहु मन्यस्व मां प्रिये ।

4. एवं चैतदकामां तु न त्वां स्प्रक्ष्यामि मैथिलि ।
कामं कामः शरीरे मे यथाकामं प्रवर्तताम् ।

5. स्त्रीरत्नमसि मैवं भूः कुरु गात्रेषु भूषणम् ।

6. विजित्य पृथिवीं सर्वां नानानगरमालिनीम् ।
जनकाय प्रदास्यामि तव हेतोर्विलासिनि ।

7. ऋद्धिं ममानुपश्य त्वं श्रियं भद्रे यशश्च मे ।
किं करिष्यसि रामेण सुभगे चीरवाससा ।
निक्षिप्तविजयो रामो गतश्रीर्वनगोचरः ।
व्रती स्थण्डिलशायी च शङ्के जीवति वा न वा ।

8. चारुस्मिते चारुदति चारुनेत्रे विलासिनि ।
मनो हरसि मे भीरु सुपर्णः पन्नगं यथा ।

9. तास्त्वां परिचरिष्यन्ति श्रियमप्सरसो यथा ।

10. इह सन्तो न वा सन्ति सतो वा नानुवर्तसे ।
तथाहि विपरीता ते बुद्धिराचारवर्जिता ।

11. वामः कामो मनुष्याणां यस्मिन्किल निबद्ध्यते ।
जने तस्मिंस्त्वनुक्रोशः स्नेहश्च किल जायते ।

12. एतस्मात्कारणान्न त्वां घातयामि वरानने ।

13. ओष्ठप्रकारैरपरा वक्त्रैर्नेत्रैस्तथापराः ।
सीतामाश्वासयामासुस्तर्जितां तेन रक्षसा ।

14. अकामां कामयानस्य शरीरमुपतप्यते ।
इच्छन्तीं कामयानस्य प्रीतिर्भवति शोभना ॥

அத். 23. [சுந். கா. 24—36]

1. दीनो वा राज्यहीनो वा यो मे भर्ता स मे गुरुः ।

2. कीदृशं तु मया पापं पुरा देहान्तरे कृतम् ।
येनेदं प्राप्यते दुःखं मया घोरं सुदारुणम् ।

3. धिगस्तु खलु मानुष्यं धिगस्तु परवश्यताम् ।
न शक्यं यत्परित्यक्तुमात्मच्छन्देन जीवितम् ।

4. छिन्ना भिन्ना विभक्ता वा दीप्तेवाग्नौ प्रदीपिता ।
रावणं नोपतिष्ठेयं किं प्रलापेन वश्चिरम् ।

5. पितुर्निदेशं नियमेन कृत्वा वनान्निवृत्तश्चरितव्रतश्च ।
स्त्रीभिस्तु मन्ये विपुलेक्षणाभिस्त्वं रंस्यसे वीतभयः कृतार्थः ।
अहं तु राम त्वयि जातकामा चिरं विनाशाय निबद्धभावा ।
मोघं चारित्वाऽथ तपो व्रतं च त्यक्ष्यामि धिग्जीवितमल्पभाग्या ।

6. स्वप्नोऽपि नायं न हि मेऽस्ति निद्रा शोकेन दुःखेन च पीडितायाः।
सुखं हि मे नास्ति यतोऽस्मि हीना तेनेन्दुपूर्णप्रतिमाननेन।
रामेति रामेति सदैव बुद्ध्या विचिन्त्य वाचा ब्रुवती तमेव।
तस्यानुरूपां च कथां तमर्थमेवं प्रपश्यामि तथा शृणोमि।

7. साऽहं तस्याग्रतस्तूर्णं प्रस्थिता वनचारिणी।
न हि मे तेन हीनाया वासः स्वर्गेऽपि रोचते।

8. एति जीवन्तमानन्दो नरं वर्षशतादपि।

9. यथा यथा समीपं स हनुमानुपसर्पति।
तथा तथा रावणं सा तं सीता परिशङ्कते।

10. नाहमस्मि तथा देवि यथा मामवगच्छसि।
विशङ्का त्यज्यतामेषा श्रद्धत्स्व वदतो मम।

11. भर्तारमिव संप्राप्ता जानकी मुदिताऽभवत्।

12. विक्रान्तस्त्वं समर्थस्त्वं प्राज्ञस्त्वं वानरोत्तम।
येनेदं राक्षसपदं त्वयैकेन प्रधर्षितम्।

13. कच्चिन्न व्यथते रामः कच्चिन्न परितप्यते।

14. धर्मापदेशात्त्यजतश्च राज्यं मां चाप्यरण्यं नयतः पदातिम्।
नासीद्व्यथा यस्य न भीर्न शोकः कच्चित्स धैर्यं हृदये करोति।

15. न चास्य माता न पिता च नान्यः
स्नेहाद्विशिष्टोऽस्ति मया समो वा।
तावत्त्वहं दूत जिजीविषेयं
यावत्प्रवृत्तिं शृणुयां प्रियस्य।

16. न मांसं राघवो भुङ्क्ते न चापि मधु सेवते ।
वन्यं सुविहितं नित्यं भक्तमश्नाति पञ्चमम् ।
नव दशान्न मशकान्न कीटान्न सरीसृपान् ।
राघवोऽपनयेद्गात्रात्त्वद्गतेनान्तरात्मना ।
नित्यं ध्यानपरो रामो नित्यं शोकपरायणः ।
नान्यच्चिन्तयते किंचित्स तु कामवशं गतः ।
अनिद्रः सततं रामः सुप्तोऽपि च नरोत्तमः ।
सीतेति मधुरां वाणीं व्याहरन्प्रतिबुद्ध्यते ।
दृष्ट्वा फलं वा पुष्पं वा यद्वान्यत्सुमनोहरम् ।
बहुशो हा प्रियेत्येवं श्वसंस्त्वामभिभाषते ।
स देवि नित्यं परितप्यमानस्त्वामेव सीतेत्यभिभाषमाणः ।
धृतव्रतो राजसुतो महात्मा तवैव लाभाय कृतप्रयत्नः ॥

அத். 24. [சுந். கா. 37—40]

1. अमृतं विषसंसृष्टं त्वया वानरभाषितम् ।
यच्च नान्यमना रामो यच्च शोकपरायणः ।
ऐश्वर्ये वा सुविस्तीर्णे व्यसने वा सुदारुणे ।
रज्ज्वेव पुरुषं बद्ध्वा कृतान्तः परिकर्षति ।
विधिर्नूनमसंहार्यः प्राणिनां प्लवगोत्तम ।
सौमित्रिं मां च रामं च व्यसनैः पश्य मोहितान् ।

2. शोकस्यास्य कदा पारं राघवोऽधिगमिष्यति ।
प्लवमानः परिश्रान्तो हतनौः सागरे यथा ।

3. यदि रामो दशग्रीवमिह हत्वा सबान्धवम् ।
मामितो गृह्य गच्छेत तत्तस्य सदृशं भवेत् ।

4. चिराय रामं प्रति शोककर्शितां कुरुष्व मां वानरमुख्य हर्षिताम् ।

5. एतत्ते सदृशं देवि पत्न्यास्तस्य महात्मनः ।
का ह्यन्या त्वामृते देवि ब्रूयाद्वचनमीदृशम् ।

6. ममैव दुष्कृतं किञ्चिन्महदस्ति न संशयः ।
समर्थावपि तौ यन्मां नावेक्षेते परन्तपौ ।

7. मत्तः प्रियतरो नित्यं भ्राता रामस्य लक्ष्मणः ।

8. मणिं तु दृष्ट्वा रामो वै त्रयाणां संस्मरिष्यति ।
वीरो जनन्या मम च राज्ञो दशरथस्य च ।

9. यदि वा मन्यसे वीर वसैकाहमरिन्दम ।
कस्मिंश्चित्संवृते देशे विश्रान्तः श्वो गमिष्यसि ।
मम चेदल्पभाग्यायाः सान्निध्यात्तव वानर ।
अस्य शोकस्य महतो मुहूर्तं मोक्षणं भवेत् ।
गते हि हरिशार्दूल पुनरागमनाय तु ।
प्राणानामपि संदेहो मम स्यान्नात्र संशयः ।
तवादर्शनजः शोको भूयो मां परितापयेत् ।
दुःखादुःखपरामृष्टां दीपयन्निव वानर ।
अयं च वीर संदेहस्तिष्ठतीव ममाग्रतः ।
सुमहांस्त्वत्सहायेषु हर्यृक्षेषु हरीश्वर ।
कथं नु खलु दुष्पारं तरिष्यन्ति महोदधिम् ।
तानि हर्यृक्षसैन्यानि तौ वा नरवरात्मजौ ।

10. बलैः समग्रैर्यदि मां रावणं जित्य संयुगे ।
विजयी स्वपुरीं यायात्तत्तु मे स्याद्यशस्करम् ।
शरैरस्तु संकुलां कृत्वा लङ्कां परबलार्दनः ।
मां नयेद्यदि काकुत्स्थस्तत्तस्य सदृशं भवेत् ।

11. मद्विशिष्टाश्च तुल्याश्च सन्ति तत्र वनौकसः ।
मत्तः प्रत्यवरः कश्चिन्नास्ति सुग्रीवसन्निधौ ।
अहं तावदिह प्राप्तः किं पुनस्ते महाबलाः ।
नहि प्रकृष्टाः प्रेष्यन्ते प्रेष्यन्ते हीतरे जनाः ।

12. मा रुदो देवि शोकेन मा भूत्ते मनसोऽप्रियम् ।

13. न ते चिरादागमनं प्रियस्य क्षमस्व मत्सङ्गमकालमात्रम् ।

14. अर्धसञ्जातसस्येव वृष्टिं प्राप्य वसुन्धरा ।

15. मनःशिलायास्तिलको गण्डपार्श्वे निवेशितः ।
त्वया प्रनष्टे तिलके तं किल स्मर्तुमर्हसि ।

16. इमं च तीव्रं मम शोकवेगं रक्षोभिरेभिः परिभर्त्सनं च ।
ब्रूयास्तु रामस्य गतः समीपं शिवश्च तेऽध्वास्तु हरिप्रवीर ॥

அத். 25. [சுந். கா. 41—58]

1. इदं विध्वंसयिष्यामि शुष्कं वनमिवानलः ।
निहत्य तद्रावणचोदितं बलं सुखं गमिष्यामि कपीश्वरालयम् ।

2. अहिरेव ह्यहेः पादान्विजानाति न संशयः ।
अहमप्यस्य भीताऽस्मि नैनं जान मि कोन्वयम् ।
जयत्यतिबलो रामो लक्ष्मणश्च महाबलः ।

3. राजा जयति सुग्रीवो राघवेणाभिपालितः ।
दासोऽहं कोसलेन्द्रस्य रामस्याक्लिष्टकर्मणः ।
हनुमान्शत्रुसैन्यानां निहन्ता मारुतात्मजः ।
न रावणसहस्रं मे युद्धे प्रतिबलं भवेत् ।
शिलाभिस्तु प्रहरतः पादपैश्च सहस्रशः ।
अर्दयित्वा पुरीं लङ्कामभिवाद्य च मैथिलीम् ।
समृद्धार्थो गमिष्यामि मिषतां सर्वरक्षसाम् ।

4. हनूमतो वेद न राक्षसोऽन्तरं
न मारुतिस्तस्य महात्मनोऽन्तरम् ।

5. मन्त्रिभिर्मन्त्रतत्त्वज्ञैरन्यैश्च शुभबुद्धिभिः ।
अन्वास्यमानं रक्षोभिः सुरैरिव सुरेश्वरम् ।

6. अहो रूपमहो धैर्यमहो सत्त्वमहो द्युतिः ।
अहो राक्षसराजस्य सर्वलक्षणयुक्तता ।
यद्यधर्मो न बलवान्स्यादयं राक्षसेश्वरः ।
स्यादयं सुरलोकस्य सशक्रस्यापि रक्षिता ।

7. तस्य भार्या वने नष्टा सीता पतिमनुव्रता ।

8. तद्भवान्दृष्टधर्मार्थस्तपःकृतपरिग्रहः ।
परदारान्महाप्राज्ञ नोपरोद्धुं त्वमर्हसि ।

9. प्राप्तं धर्मफलं तावद्भवता नात्र संशयः ।
फलमस्याप्यधर्मस्य क्षिप्रमेव प्रपत्स्यसे ।

10. यां सीतेत्यभिजानासि येयं तिष्ठति ते वशे ।
कालरात्रीति तां विद्धि सर्वलङ्काविनाशिनीम् ।

11. राजधर्मविरुद्धं च लोकवृत्तेश्च गर्हितम् ।
तव चासदृशं वीर कपेरस्य प्रमापणम् ।

12. न चाप्यस्य कपेर्घाते कञ्चित्पश्याम्यहं गुणम् ।
तेष्वयं पात्यतां दण्डो यैरयं प्रेषितः कपिः ।

13. दृष्टा सीतेति विक्रान्तः संक्षेपेण न्यवेदयत् ।

14. यश्चार्थस्तत्र वक्तव्यो गतैरस्माभिरात्मवान् ।
रक्षितव्यं च यत्तत्र तद्भवान्व्याकरोतु नः ॥

அத். 26. [சுந். கா. 58—61]

1. वरा मण्डोदरी नाम तया स प्रतिषेधितः ।
उक्तश्च मधुरां वाणीं तथा स मदनार्दितः ।
सीतया तव किं कार्यं महेन्द्रसमविक्रम ।
देवगन्धर्वकन्याभिर्यक्षकन्याभिरेव च ।
सार्धं प्रभो रमस्वेह सीतया किं करिष्यसि ।
ततस्ताभिः समेताभिर्नारीभिः स महाबलः ।
प्रसाद्य सहसा नीतो भवनं स्वं निशाचरः ।

2. किमन्यदत्र कर्तव्यं गृहीत्वा याम जानकीम् ।

3. हनुमन्तं महावेगं वहन्त इव दृष्टिभिः ।

4. गायन्तमन्यः प्रहसन्नुपैति हसन्तमन्यः प्ररुदन्नुपैति ।
रुदन्तमन्यः प्रणुदन्नुपैति नुदन्तमन्यः प्रणुदन्नुपैति ॥

அ.த். 27. [சுந். கா. 63—66, யுத்த கா. —1]

1. दृष्टा देवी न संदेहो न चान्येन हनूमता ।

2. नियतामक्षतां देवीं राघवाय न्यवेदयत् ।

3. ऊर्ध्वं मासान्न जीवेयं रक्षसां वशमागता ।
इति मामब्रवीत्सीता कृशाङ्गी धर्मचारिणी ।
रावणान्तःपुरे रुद्धा मृगीवोत्फुल्ललोचना ।

4. न जीवेयं क्षणं सौम्य विना तामसितेक्षणाम् ।
नय मामपि तं देशं यत्र दृष्टा मम प्रिया ।
किमाह सीता भद्रं ते ब्रूहि सौम्य पुनः पुनः ।

5. पिपासुमिव तोयेन सिञ्चन्ती वाक्यवारिणा ।
इदं तु मम दीनस्य मनो भूयः प्रकर्षति ।

6. यदिहास्य प्रियाख्यातुर्न कुर्मि सदृशं प्रियम् ।
एष सर्वस्वभूतोऽस्तु परिष्वङ्गो हनूमतः ।
मया कालमिमं प्राप्य दत्तस्तस्य महात्मनः ॥

அத். 28. [யுத்த கா. 1—13]

1. यद्यप्येष तु वृत्तान्तो वैदेह्या गदितो मम ।
समुद्रपारगमने हरीणां किमिवोत्तरम् ।

2. शूराणां हि मनुष्याणां त्वद्विधानां महात्मनाम् ।
विनष्टे वा प्रनष्टे वा शोकः सर्वार्थनाशनः ।
अचिराद्रक्ष्यसे सीतां तीर्त्वा सागरमक्षयम् ।
तदलं शोकमालम्ब्य क्रोधमालम्ब भूपते ।

3. तपसा सेतुबन्धेन सागरोच्छोषणेन वा ।
सर्वथा सुसमर्थोऽस्मि सागरस्यास्य लङ्घने ।
यथासुखं यथावच्च लङ्कायामसि दृष्टवान् ।
सर्वमाचक्ष्व तत्त्वेन सर्वथा कुशलो ह्यसि ।

4. हसन्तमिव फेनौघैर्नृत्यन्तमिव चोर्मिभिः ।

5. शोकश्च किल कालेन गच्छता ह्यपगच्छति
मम चापश्यतः कान्तामहन्यहनि वर्धते ।
कदा नु खलु मां साध्वी सीता सुरसुतोपमा ।

6. सोत्कण्ठा कण्ठमालम्ब्य योक्ष्यत्यानन्दजं पयः ।

7. आहृता सा परित्याज्या कलहार्थे कृतेन किम् ।
न नः क्षमं वीर्यवता तेन धर्मानुवर्तिना ।
वैरं निरर्थकं कर्तुं दीयतामस्य मैथिली ।

8. प्रियाप्रिये सुखं दुःखं लाभालाभौ हिताहिते ।
धर्मकामार्थकृच्छ्रेषु यूयमर्हथ वेदितुम् ।

9. तनुमध्या पृथुश्रोणि शारदेन्दुनिभानना ।
हेमबिम्बनिभा सौम्या मायेव मयनिर्मिता ।
सुलोहिततलौ श्लक्ष्णौ चरणौ सुप्रतिष्ठितौ ।
दृष्ट्वा ताम्रनखौ तस्या दीप्यते मे शरीरजः ।

10. अदेया च यथा सीता वध्यौ दशरथात्मजौ ।
भवद्भिर्मन्त्र्यतां मन्त्रः सुनीतं चाभिधीयताम् ।

11. सर्वमेतन्महाराज कृतमप्रतिमं तव ।
विधीयते सहास्माभिरादावेवास्य कर्मणः

12. तस्मात्त्वया समारब्धं कर्म ह्यगतिमं परैः ।
अहं समीकरिष्यामि हत्वा शत्रूंस्तवानघ ।

13. बलात्कुक्कुटवृत्तेन वर्तस्व सुमहामल ।
आक्रम्याक्रम्य सीतां वै तथा भुङ्क्ष्व रमस्व च ।

14. इत्यहं तस्य शापस्य भीतः प्रसभमेव ताम् ।
नारोपये बलात्सीतां वैदेहीं शयने शुभे ।

15. तच्चास्य बलमादास्ये बलेन महता हतः ।
उदयन्सविता काले नक्षत्राणामिव प्रभाम् ॥

அத். 29. [யுத்த கா. 14—19]

1. अनन्तभोगेन सहस्रमूर्ध्ना नागेन भीमेन महाबलेन ।
बलात्परिक्षिप्तमिमं भवन्तो राजानमुत्क्षिप्य विमोचयन्तु ।

2. निगृह्य राजा परिरक्षितव्यो भूतैर्यथा भीमबलैर्गृहीतः ।

3. परस्य वीर्यं स्वबलं च बुद्ध्वा स्थानं क्षयं चैव तथैव वृद्धिम् ।
तथा स्वपक्षेऽप्यनुमृश्य बुद्ध्या वदेत्क्षमं स्वामिहितं च मन्त्री ।

4. सत्त्वेन वीर्येण पराक्रमेण शौर्येण धैर्येण च तेजसा च ।
एकः कुलेऽस्मिन्पुरुषो विमुक्तो विभीषणस्तात कनिष्ठ एषः ।

5. पुत्रप्रवादेन तु रावणस्य त्वमिन्द्रजिन्मित्रमुखोऽसि शत्रुः ।

6. अन्यस्त्वेवं विधं ब्रूयाद्वाक्यमेतन्निशाचर ।
अस्मिन्मुहूर्ते न भवेत्त्वां तु धिक्कुलपांसनम् ।

7. न त्वामिच्छाम्यहं द्रष्टुं रामेण निहतं शरैः ।
स्वस्ति तेऽस्तु गमिष्यामि सुखी भव मया विना ।

8. रावणो नाम दुर्वृत्तो राक्षसो राक्षसेश्वरः ।
तस्याहमनुजो भ्राता विभीषण इति श्रुतः ।
सर्वलोकशरण्याय राघवाय महात्मने ।
निवेदयत मां क्षिप्रं विभीषणमुपस्थितम् ।

9. प्रकृत्या राक्षसो ह्येष भ्राताऽमित्रस्य ते प्रभो ।
तस्याहं निग्रहं मन्ये क्षमं क्षमवतां वर ।

10. अदेशकाले संप्राप्तः सर्वथा शङ्क्यतामयम् ।
उद्योगं तव संप्रेक्ष्य मिथ्यावृत्तं च रावणम् ।

11. वालिनश्च वधं श्रुत्वा सुग्रीवं चाभिषेचितम् ।
राज्यं प्रार्थयमानश्च बुद्धिपूर्वमिहागतः ।

12. मित्रभावेन संप्राप्तं न त्यजेयं कथञ्चन ।
दोषो यद्यपि तस्य स्यात्सतामेतदगर्हितम् ।

13. अमित्रास्तत्कुलीनाश्च प्रातिदेश्याश्च कीर्तिताः ।
व्यसनेषु प्रहर्तारस्तस्मादयमिहागतः ।
न वयं तत्कुलीनाश्च राज्यकाङ्क्षी च राक्षसः ।

14. न सर्वे भ्रातरस्तात भवन्ति भरतोपमाः ।
मद्विधा वा पितुः पुत्राः सुहृदो वा भवद्विधाः ।

15. बद्धाञ्जलिपुटं दीनं याचन्तं शरणागतम् ।
न हन्यादानृशंस्यार्थमपि शत्रुं परंतप ।

16. करिष्यामि यथार्थं तु कण्डोर्वचनमुत्तमम् ।

17. सकृदेव प्रपन्नाय तवास्मीति च याचते ।
अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम ।

18. मम चाप्यन्तरात्मायं शुद्धं वेत्ति विभीषणम् ।
अनुमानाच्च भावाच्च सर्वतः सुपरीक्षितः ।

19. अनुजो रावणस्याहं तेन चाप्यवमानितः ।
भवन्तं सर्वभूतानां शरण्यं शरणागतः ।
परित्यक्ता मया लङ्का मित्राणि च धनानि च ।
भवद्गतं मे राज्यं च जीवितं च सुखानि च ।
वचसा सान्त्वयित्वैनं लोचनाभ्यां पिबन्निव ।

20. आख्याहि मम तत्त्वेन राक्षसानां बलाबलम् ।

21. अहं हत्वा दशग्रीवं सप्रहस्तं सबान्धवम् ।
राजानं त्वां करिष्यामि सत्यमेतद्ब्रवीमि ते ।

22. अब्रवील्लक्ष्मणं प्रीतः समुद्राज्जलमानय ।
तेन चेमं महाप्राज्ञमभिषिञ्च विभीषणम् ।
राजानं रक्षसां क्षिप्रं प्रसन्ने मयि मानद ॥

அத். 30. [யுத்த கா. 20—24]

त्वं वै महाराज कुलप्रसूतो महाबलश्चर्क्षरजःसुतश्च ।
1. न कश्चिदर्थस्तव नास्त्यनर्थस्तथा हि मे भ्रातृसमो हरीश ।
अहं यद्यहरं भार्यां राजपुत्रस्य धीमतः ।
किं तत्र तव सुग्रीव किष्किन्धां प्रति गम्यताम् ।
न हीयं हरिभिर्लङ्का शक्या प्राप्तुं कथञ्चन ।
देवैरपि सगन्धर्वैः किं पुनर्नरवानरैः ।
2. अरिश्च रामस्य सहानुबन्धः स मेऽसि वालीव वधार्ह वध्यः ।

3. न साम्ना शक्यते कीर्तिर्न साम्ना शक्यते यशः ।
प्राप्तं लक्ष्मण लोकेऽस्मिञ्जयो वा रणमूर्धनि ।

4. विमानैर्बहुभिर्लङ्का संकीर्णा भुवि राजते ।
विष्णोः पदमिवाकाशं छादितं पाण्डुरैर्घनैः ॥

அத். 31. [யுத்த கா. 24—34

1. सीतां वाऽस्मै प्रयच्छाशु सुयुद्धं वा प्रदीयताम् ।

2. नैव सीतां प्रयच्छामि सर्वलोकभयादपि ।

3. अथ किञ्चिददृष्टं वा भूयस्तद्द्रष्टुमर्हथः ।
विभीषणो वा कार्त्स्न्येन भूयः संदर्शयिष्यति ।
यद्बलं च समाश्रित्य सीतां मे हृतवानसि ।

4. तद्दर्शय यथाकामं ससैन्यः सहबान्धवः ।

5. विभीषणेन सचिवै राक्षसैः परिवारितः ।
सुग्रीवो वानरेन्द्रस्त्वां युद्धार्थमभिवर्तते ।

6. किञ्चिदाविग्नहृदयो जातक्रोधश्च रावणः ।
भर्त्सयामास तौ वीरौ कथान्ते शुकसारणौ ।

7. व्यसनेनात्मनः सीते मम भार्या भविष्यसि ।
विसृजेमां मतिं मूढे किं मृतेन करिष्यसि ।

8. सकामा भव कैकेयि हतोऽयं कुलनन्दनः ।
कुलमुत्सादितं सर्वं त्वया कलहशीलया ।
आर्येण किं ते कैकेयि कृतं रामेण विप्रियम् ।
यन्मया चीरवसनस्त्वया प्रस्थापितो वनम् ।

9. मोक्ष्यसे शोकजं वारि निर्मोकमिव पन्नगी।

10. परीष्वज्य च सुस्निग्धं ददौ च स्वयमासनम्।
इहासीना सुखं सर्वमाख्याहि मम तत्त्वतः।

11. जनन्या राक्षसेन्द्रो वै त्वन्मोक्षार्थं बृहद्वचः।
अविद्धेन च वैदेहि मन्त्रिवृद्धेन बोधितः।
दीयतामभिसत्कृत्य मनुजेन्द्राय मैथिली।
न त्वामुत्सहते मोक्तुमर्थमर्थपरो यथा।
नोत्सहत्यमृतो मोक्तुं युद्धे त्वामिति मैथिलि।

அத். 32 [யுத்த கா. 35—41

1. भवतश्चाप्यहं वेद्मि युद्धे सत्यपराक्रमान्।
तूष्णींकानीक्षतोऽन्योन्यं विदित्वा रामविक्रमम्।
तन्मह्यं रोचते संधिः सह रामेण रावण।

2. यदर्थमभियुक्ताः स्म सीता तस्मै प्रदीयताम्।

3. मानुषं कृपणं राममेकं शाखामृगाश्रयम्।
समर्थं मन्यसे केन त्यक्तं पित्रा वनालयम्।
रक्षसामीश्वरं मां च देवतानां भयंकरम्।
हीनं मां मन्यसे केन ह्यहीनं सर्वविक्रमैः।

4. द्विधा भज्येयमप्येवं न नमेयं तु कस्यचित्।
एष मे सहजो दोषः स्वभावो दुरतिक्रमः।

5. सुग्रीवस्त्वं परोक्षं मे हीनग्रीवो भविष्यसि।

6. त्वयि किंचित्समापन्ने किं कार्यं सीतया मम।

भरतेन महाबाहो लक्ष्मणेन यवीयसा।
शत्रुघ्नेन च शत्रुघ्न स्वशरीरेण वा पुनः।
त्वयि चानागते पूर्वमिति मे निश्चिता मतिः।
जानतश्चापि ते वीर्यं महेन्द्रवरुणोपम्।
हत्वाऽहं रावणं युद्धे सपुत्रबलवाहनम्।
अभिषिच्य च लङ्कायां विभीषणमथापि च।
भरते राज्यमावेश्य त्यक्ष्ये देहं महाबल।

7. तव भार्यापहर्तारं दृष्ट्वा राघव रावणम्।
मर्षयामि कथं वीर जानन् पौरुषमात्मनः।

8. भ्रष्टश्रीक गतैश्वर्य मुमूर्षो नष्टचेतन।

அத். 33. [யுத்த கா. 42—59

1. अत्र सा मृगशावाक्षी मत्कृते जनकात्मजा।
पीड्यते शोकसन्तप्ता कृशा स्थण्डिलशायिनी।

2. यत्कृते चिन्तयानस्य शोकार्तस्य पितुर्मम।
अस्पृष्ट्वा शयनं गात्रैस्त्रियामा याति शर्वरी।
कृत्स्नेयं यत्कृते लङ्का नदी वर्षास्विवाकुला।
सोऽयं मूलहरोऽनर्थः सर्वेषां निहतो मया।

3. निर्विशङ्का निरुद्विग्ना निरपेक्षा च मैथिली।
मामुपस्थास्यते सीता सर्वाभरणभूषिता।

4. ऊचुर्लक्षणिनो ये मां पुत्रिण्यविधवेति च
नेऽद्य सर्वे हते रामे ज्ञानिनोऽनृतवादिनः

5. रामलक्ष्मणयोरर्थे नाद्य शक्यमजीवितुम्।

6. यथैव मां वनं यान्तमनुयातो महाद्युतिः।
अहमप्यनुयास्यामि तथैवैनं यमक्षयम्।

7. न चातिक्रमितुं शक्यं दैवं सुग्रीव मानुषैः।
अनुज्ञाता मया सर्वे यथेष्टं गन्तुमर्हथ।
ययोर्वीर्यमुपाश्रित्य प्रतिष्ठा काङ्क्षिता यथा।

8. तावुभौ देहनाशाय प्रसुप्तौ पुरुषर्षभौ।
जीवन्नद्य विपन्नोऽस्मि नष्टराज्यमनोरथः।

9. प्राप्तप्रतिज्ञश्च रिपुः सकामो रावणः कृतः।

10. सोऽहं दानैश्च मानैश्च सततं पूजितस्त्वया।
सान्त्वैश्च विविधैः काले किं न कुर्यां प्रियं तव।

11. अहो दीप्तो महातेजा रावणो राक्षसेश्वरः।
आदित्य इव दुष्प्रेक्षो रश्मिभिर्भाति रावणः।

12. दिष्ट्यायमद्य पापात्मा मम दृष्टिपथं गतः।
अद्य क्रोधं विमोक्ष्यामि सीताहरणसंभवम्।

13. व्यदारयद्वानरसागरौघं महाझषः पूर्णमिवार्णवौघम्।

14. कृतं त्वया कर्म महत्सुभीमं हतप्रवीरश्च कृतस्त्वयाहम्।
आश्वास्य निर्याहि रथी च धन्वी तदा बलं द्रक्ष्यसि मे रथस्थः॥

15. स एवमुक्तो हतदर्पहर्षो निकृत्तचापः स हताश्वसूतः।
शरार्दितः कृत्तमहाकिरीटो विवेश लङ्कां सहसा स राजा॥

அத். 34. [யுத்த கா. 60—68

1. देवदानवगन्धर्वैर्यक्षराक्षसपन्नगैः ।
अवध्यत्वं मया प्राप्तं मानुषेभ्यो न याचितम् ।

2. शप्तोऽहं वेदवत्या च यथा सा धर्षिता पुरा ।
सेयं सीता महाभागा जाता जनकनन्दिनी ।

3. त्रायस्वेमां पुरीं लङ्कां बालवृद्धावशेषिताम् ।

4. प्रथमं वै महाराज कृत्यमेतदनिन्दितम् ।
केवलं वीर्यदर्पेण नानुबन्धो विचारितः ।

5. ममापनयजं दोषं विक्रमेण समीकुरु ।
स सुहृद्यो विपन्नार्थं दीनमभ्यवपद्यते ।

6. सुखी भव महाबाहो सीता भवतु दुःखिता ।

7. राज्येन नास्ति मे कार्यं किं करिष्यामि सीतया ।
कुम्भकर्णविहीनस्य जीविते नास्ति मे रतिः ।

அத். 35. [யுத்த கா. 68—69

1. तस्यायं कर्मणः प्राप्तो विपाको मम शोकदः ।
यन्मया धार्मिकः श्रीमान् स निरस्तो विभीषणः ।

2. स कस्मात् प्राकृत इव शोचस्यात्मानमीदृशम् ।

அத். 36. [யுத்த கா. 72—93

1. यस्य विक्रममासाद्य राक्षसा निधनं गताः ।
तं मन्ये राघवं वीरं नारायणमनामयम् ।

2. मन्युशल्यं वहन् दीनः प्रविवेश स्वमालयम् ।

3. च्युता गृहाच्च राज्याच्च रामहस्ताच्च मैथिली ।
किं तवैषापराद्धा हि यदेनां हन्तुमिच्छसि ।

4. इमां हत्वा ततो रामं लक्ष्मणं त्वां च वानर ।
सुग्रीवं च वधिष्यामि तं चानार्यं विभीषणम् ।

5. अनर्थेभ्यो न शक्नोति त्रातुं धर्मो निरर्थकः ।

6. यस्मादर्था विवर्धन्ते येष्वधर्मः प्रतिष्ठितः ।
क्लिश्यन्ते धर्मशीलाश्च तस्मादेतौ निरर्थकौ ।

7. धर्ममूलं त्वया छिन्नं राज्यमुत्सृजता तदा ।

8. यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बान्धवाः ।
यस्यार्थाः स पुमान् लोके यस्यार्थाः स च पण्डितः ।
यस्यार्थाः स च विक्रान्तो यस्यार्थाः स च बुद्धिमान् ।
यस्यार्थाः स महाभागो यस्यार्थाः स महागुणः ।

9. किमात्मानं महात्मानं आत्मानं नावबुध्यसे ।

10. भूयस्तच्छ्रोतुमिच्छामि ब्रूहि यत्ते विवक्षितम् ।

11. अयं त्वां सचिवैः सार्धं महात्मा रजनीचरः ।
अभिज्ञस्तस्य देशस्य पृष्ठतोऽनुगमिष्यति ।

12. इह त्वं जातसंवृद्धः साक्षात्भ्राता पितुर्मम ।
कथं द्रुह्यसि पुत्रस्य पितृव्यो मम राक्षस ।

13. वाग्बलं त्यज दुर्बुद्धे क्रूरकर्माऽसि राक्षस ।
कुरु तत्कर्म येनाहं श्रद्दध्यां तव कत्थनम् ।

14. सुपुष्पाविव निष्पत्रौ वने शाल्मलिकिंशुकौ ।

15. धर्मात्मा सत्यसन्धश्च रामो दाशरथिर्यदि ।
पौरुषे चाप्रतिद्वन्द्वः शरैनं जहि रावणिम् ।

16. न्यवेदयत रामाय तदा हृष्टो विभीषणः ।

17. धिगस्तु कुब्जामसतीं मन्थरां पापनिश्चयाम् ।

18. कथं नाम दशग्रीव साक्षाद्वैश्रवणानुज ।
त्वमेव तु सहास्माभी राघवे क्रोधमुत्सृज ।

அங் 37. [யுத்த கா. 94—112]

1. इन्द्रियार्थेषु तिष्ठन्तं भूतात्मानमिव प्रजाः ।

2. हतो भर्ता हतो भ्राता यासां च तनया हताः ।
वधेनाद्य रिपोस्तासां करोम्यश्रुप्रमार्जनम् ।

3. रामवृक्षं रणे हन्मि सीतापुष्पफलप्रदम् ।
प्रशाखा यस्य सुग्रीवो जाम्बवान्कुमुदो नलः ।

4. स ददर्श ततो रामं तिष्ठन्तमपराजितम् ।
लक्ष्मणेन सह भ्रात्रा विष्णुना वासवं यथा ।

5. अरावणमरामं वा जगद् द्रक्ष्यथ वानराः ।
राज्यनाशं वने वासं दण्डके परिधावनम् ।

.... .... .... .... .... .... .... .... ....

अद्य सर्वमहं त्यक्ष्ये निहत्वा रावणं रणे ।

6. अद्य रामस्य रामत्वं पश्यन्तु मम संयुगे ।

7. न हि युद्धेन मे कार्यं नैव प्राणैर्न सीतया ।
भ्रातरं निहतं दृष्ट्वा लक्ष्मणं रणपांसुषु ।

देशे देशे कलत्राणि देशे देशे च बान्धवाः ।
तं तु देशं न पश्यामि यत्र भ्राता सहोदरः ।

8. नैराश्यमुपगन्तुं ते तदलं मत्कृतेऽनघ ।
वधेन रावणस्याद्य प्रतिज्ञामनुपालय ।

9. मया विरहितां दीनां वर्तमानां महावने ।
वैदेहीं प्रसभं हृत्वा शूरोऽहमिति मन्यसे ।
नैव लज्जास्ति ते सीतां चोरवत् व्यपकर्षतः ।

10. त्वया शत्रोः समक्षं मे रथोऽयमपवाहितः ।
त्वयाद्य हि ममानार्य चिरकालसमार्जितम् ।
यशो वीर्यं च तेजश्च प्रत्ययश्च विनाशितः ।

11. रथं शीघ्रमिमं सूत राघवाभिमुखं कुरु ।
नाहत्वा समरे शत्रून्निवर्तिष्यति रावणः ।

12. ततो युद्धपरिश्रान्तं समरे चिन्तया स्थितम् ।

13. नाशयत्येष वै भूतं तदेव सृजति प्रभुः ।
पायत्येष तपत्येष वर्षत्येष गभस्तिभिः ।

14. गगनं गगनाकारं सागरः सागरोपमः ।
रामरावणयोर्युद्धं रामरावणयोरिव ।

15. गतासुर्भीमवेगस्तु नैर्ऋतेन्द्रो महद्युतिः ।
पपात स्यन्दनाद्भूमौ वृत्रो वज्रहतो यथा ।

16. वीर विक्रान्त विख्यात विनीत नयकोविद ।

17. गतः सेतुः सुनीतानां गतो धर्मस्य विग्रहः ।
गतः सत्त्वस्य सङ्क्षेपः प्रस्तावानां गतिर्गतः ।

18. नायं विनष्टो निश्चेष्टः समरे चण्डविक्रमः ।
अत्युन्नत महोत्साहः पतितोऽयमशङ्कितः ।
नैवं विनष्टाः शोच्यन्ते क्षत्रधर्ममवस्थिताः ।

19. मरणान्तानि वैराणि निर्वृत्तं नः प्रयोजनम् ।
क्रियतामस्य संस्कारो ममाप्येष यथा तव ।

அத். 88. [ யுத்த கா. 113—116

1. काचिदङ्के शिरः कृत्वा रुरोद मुखमीक्षती ।

2. यथैव च जनस्थाने राक्षसैर्बहुभिर्वृतः ।
व्यक्तमेष महायोगी परमात्मा सनातनः ।

3. इन्द्रियाणि पुरा जित्वा जितं त्रिभुवनं त्वया ।
स्मरद्भिरिव तद्वैरं तैरेव त्वं विनिर्जितः ।

4. आनयित्वा तु तां दीनां छद्मनाऽऽत्मस्वदूषण ।
अप्राप्य चैव तं कामं मैथिलीसङ्गमे कृतम् ।
पतिव्रतायास्तपसा नूनं दग्धोऽसि मे प्रभो ।

5. न कुलेन न रूपेण न दाक्षिण्येन मैथिली ।
मयाधिका वा तुल्या वा त्वं तु मोहान्न बुध्यसे ।

6. पिता दानवराजो मे भर्ता मे राक्षसेश्वरः ।
पुत्रो शक्रस्य निर्जेता इत्येवं गर्विता भृशम् ।

7. हा स्वप्नः सत्यमेवेदं त्वं रामेण गतं हतः ।
त्वं मृत्योरपि मृत्युः स्याः कथं मृत्युवशं गतः ।
8. सुकृतं दुष्कृतं च त्वं गृहीत्वा स्वां गतिं गतः ।
आत्मानमनुशोचामि त्वद्वियोगेन दुःखिता ।
9. तवापि मे प्रियं कार्यं त्वत्प्रभावाच्च मे जितम् ।
अवश्यं तु क्षमं वाच्यो मया त्वं राक्षसेश्वर ।
अर्धमानृतसंयुक्तः कामं त्वेष निशाचरः ।
तेजस्वी बलवान्शूरस्संयुगेषु च नित्यशः ।
शतक्रतुमुखैर्देवैः श्रूयते न पराजितः ।
महात्मा बलसंपन्नो रावणो लोकरावणः ।
क्रियतामस्य संस्कारो ममाप्येष यथा तव ।
10. न हि पश्यामि सदृशं चिन्तयन्ती प्लवङ्गम ।
सदृशं मत्प्रियाख्याने तव दातुं भवेत्समम् ।
हिरण्यं वा सुवर्णं वा रत्नानि विविधानि च ।
राज्यं वा त्रिषु लोकेषु नैतदर्हति भावितुम् ।
11. न परः पापमादत्ते परेषां पापकर्मणाम् ।
समयो रक्षितव्यस्तु सन्तश्चारित्रभूषणाः ।
12. कार्यं करुणमार्येण न कश्चिन्नापराध्यति ।

அத். 39. [யுத்த கா. 116—121

1. अब्रवीद् द्रष्टुमिच्छामि भर्तारं वानरोत्तम ।
2. दिव्याङ्गरागां वैदेहीं दिव्याभरणभूषिताम् ।
इह सीतां शिरःस्नातां उपस्थापय मा चिरम् ।

3. अस्नाता द्रष्टुमिच्छामि भर्तारं राक्षसाधिप ।

4. तामागतामुपश्रुत्य रक्षोगृहचिरोषिताम् ।
हर्षो दैन्यं च रोषश्च त्रयं राघवमाविशत् ।

5. न गृहाणि न वस्त्राणि न प्राकारास्तिरस्क्रिया ।
नेदृशा राजसत्कारा वृत्तमावरणं स्त्रियाः ।

6. कळत्रनिरपेक्षैश्च इङ्गितैरस्य दारुणैः ।
अप्रीतमिव सीतायां तर्कयन्ति स्म राघवम् ।

7. रुरोदासाद्य भर्तारमार्यपुत्रेति भाषिणी ।
विस्मयाच्च प्रहर्षाच्च स्नेहाच्च पतिदेवता ।
उदैक्षत मुखं भर्तुः सौम्यं सौम्यतरानना ।

8. तां तु पार्श्वस्थितां प्रह्वां रामः संप्रेक्ष्य मैथिलीम् ।
हृदयान्तर्गतक्रोधो व्याहर्तुमुपचक्रमे ।

9. एषासि निर्जिता भद्रे शत्रुं जित्वा मया रणे ।
पौरुषाद्यदनुष्ठेयं तदेतदुपपादितम् ।
गतोऽस्म्यन्तममर्षस्य धर्षणा संप्रमार्जिता ।
अवमानश्च शत्रुश्च मया युगपदुद्धृतौ ।
अद्य मे पौरुषं दृष्टमद्य मे सफलः श्रमः ।
अद्य तीर्णप्रतिज्ञत्वात् प्रभवामीह चात्मनः ।
या त्वं विरहिता नीता चलचित्तेन रक्षसा ।
दैवसंपादितो दोषो मानुषेण मया जितः ।

........................................

.... .... .... .... .... .... .......

विभीषणस्य भक्तस्य सफलोऽद्य परिश्रमः ॥

10. सुग्रीवोत्फुल्लनयना बभूवाश्रुपरिप्लुता ॥

11. स बद्ध्वा भ्रुकुटीं वक्त्रे तिर्यक्प्रेक्षितलोचनः ॥

अब्रवीत्परुषं सीतां मध्ये वानररक्षसाम् ॥

12. विदितश्चास्तु ते भद्रे योऽयं रणपरिश्रमः ॥

स तीर्णः सुहृदां वीर्यान्नत्वदर्थे मया कृतः ॥

रक्षता तु मया वृत्तमपवादं च सर्वशः ।

प्रख्यातस्यात्मवंशस्य न्यङ्गं च परिरक्षता ।

13. प्राप्तचारित्रसंदेहा मम प्रतिमुखे स्थिता ।

दीपो नेत्रातुरस्येव प्रतिकूलाऽसि मे दृढम् ।

14. तद्गच्छ ह्यभ्यनुज्ञाता यथेष्टं जनकात्मजे ।

एता दश दिशो भद्रे कार्यमस्ति न मे त्वया ।

15. कः पुमान्हि कुले जातः स्त्रियं परगृहोषिताम् ।

तेजस्वी पुनरादद्यात्सुहृल्लेख्येन चेतसा ।

रावणाङ्कपरिभ्रष्टां दृष्टां दुष्टेन चक्षुषा ।

कथं त्वां पुनरादद्यां कुलं व्यपदिशन्महत् ।

तदर्थं निर्जिता मे त्वं यशः प्रत्याहृतं मया ।

नास्ति मे त्वय्यभिष्वङ्गो यथेष्टं गम्यतामितः ।

16. न हि त्वां रावणो दृष्ट्वा दिव्यरूपां मनोरमाम् ।

मर्षयेत चिरं सीते स्वगृहे परिवर्तिनीम् ।

17. ततः प्रियार्हश्रवणा तदप्रियं
प्रियादुपश्रुत्य चिरस्य मैथिली ।
मुमोच बाष्पं सुभृशं प्रवेपिता
गजेन्द्रहस्ताभिहतेव सल्लकी ॥

18. सा तदश्रुतपूर्वं हि जने महति मैथिली ।
श्रुत्वा भर्तृवचो रूक्षं लज्जया व्रीडिताऽभवत् ।
प्रविशन्तीव गात्राणि स्वान्येव जनकात्मजा ।
वाक्शल्यैस्तैः सशल्येव भृशमश्रूण्यवर्तयत् ।

19. किं मामसदृशं वाक्यं ईदृशं श्रोत्रदारुणम् ।
रूक्षं श्रावयसे वीर प्राकृतः प्राकृतामिव ।

20. न तथाऽस्मि महाबाहो यथा त्वं परिशङ्कसे ।
प्रत्ययं गच्छ मे येन चारित्रेणैव ते शपे ।

21. पृथक्स्त्रीणां प्रचारेण जातिं तां परिशङ्कसे ।
परित्यजेमां शङ्कां तु यदि तेऽहं परीक्षिता ।

22. यद्यहं गात्रसंस्पर्शं गताऽस्मि विवशा प्रभो ।
कामकारो न मे तत्र दैवं तत्रापराध्यति ।
मदधीनं तु यत्तन्मे हृदयं त्वयि वर्तते ।
पराधीनेषु गात्रेषु किं करिष्याम्यनीश्वरा ।

23. सह संवृद्धभावाच्च संसर्गेण च मानद ।
यद्यहं ते न विज्ञाता हता तेनास्मि शाश्वतम् ।

24. प्रेषितस्ते यदा वीरो हनुमानवलोकक:।
लङ्कास्थाऽहं त्वया वीर किं तदा न विसर्जिता।
25. त्वया तु नरशार्दूल क्रोधमेवानुवर्तता।
लघुनेव मनुष्येण स्त्रीत्वमेव पुरस्कृतम्।
26. अपदेशेन जनकान्नोत्पत्तिर्वसुधातलात्।
मम वृत्तं च वृत्तज्ञ बहु तेन पुरस्कृतम्।
न प्रमाणीकृत: पाणिर्बाल्ये बालेन पीडित:।
मम भक्तिश्च शीलं च सर्वं ते पृष्ठत: कृतम्।
27. चितां कुरु मे सौमित्रे व्यसनस्यास्य भेषजम्।
मिथ्योपघातोपहता नाहं जीवितुमुत्सहे।
अप्रीतस्य गुणैर्भर्तुः त्यक्ताया जनसंसदि।
मा क्षमा मे गतिर्गन्तुं प्रवेक्ष्ये हव्यवाहनम्।
28. स विज्ञाय ततश्छन्दं रामस्याकारसूचितम्।
29. यथा मे हृदयं नित्यं नापसर्पति राघवात्।
तथा लोकस्य साक्षी मां सर्वत: पातु पावक:।
यथा मां शुद्धचारित्रां दुष्टां जानाति राघव:।
तथा लोकस्य साक्षी मां सर्वत: पातु पावक:।
कर्मणा मनसा वाचा यथा नातिचराम्यहम्।
राघवं सर्वधर्मज्ञं तथा मां पातु पावक:।
30. कर्ता सर्वस्य लोकस्य श्रेष्ठो ज्ञानवतां वर:।
उपेक्षसे च वैदेहीं मानुष: प्राकृतो यथा।

31. आत्मानं मानुषं मन्ये रामं दशरथात्मजम् ।

32. नैव वाचा न मनसा नानुध्यानान्न चक्षुषा ।
सुवृत्ता वृत्तशौण्डीर्यं न त्वामतिचचर ह ।

33. अवश्यं त्रिपु लोकेषु न सीता पापमर्हति ।

34. बालिशः खलु कामात्मा रामो दशरथात्मजः ।
इति वक्ष्यन्ति मां सन्तो जानकीमविशोध्य हि ।

35. इमामपि विशालाक्षीं रक्षितां स्वेन तेजसा ।
रावणो नातिवर्तेत वेलामिव महोदधिः ।

36. अवश्यं तु मया कार्यं सर्वेषां वो वचः शुभम् ।

அங் 40. [யுத்த கா. 122—131]

1. कैकेय्या यानि चोक्तानि वाक्यानि वदतां वर ।
तव प्रव्राजनार्थानि स्थितानि हृदये मम ।

.... .... .... .... .... .... .... .... .... ....

भ्रातृभिः सह राज्यस्थो दीर्घमायुरवाप्नुहि ।

2. कर्तव्यो न तु वैदेहि मन्युस्त्यागमिमं प्रति ।
रामेण त्वद्विशुद्ध्यर्थं कृतमेतद्धितैषिणा ।

3. तं विना केकयीपुत्रं भरतं धर्मचारिणम् ।
न मे स्नानं बहुमतं वस्त्राण्याभरणानि च ।

4. तं तु भ्रातरं द्रष्टुं भरतं त्वरते मनः ।
मां निवर्तयितुं योऽसौ चित्रकूटमुपागतः ।

5. अत्र दत्तवरः शेते प्रमाथी राक्षसेश्वरः ।
तव हेतोर्विशालाक्षि रावणो निहतो मया ।

6. पङ्कदिग्धस्तु भरतो जटिलस्त्वां प्रतीक्षते ।
पादुके ते पुरस्कृत्य सर्वं च कुशलं गृहे ।

7. एतच्छ्रुत्वा यमाकारं भजते भरतस्तदा ।
स च वेदितव्यः स्यात्सर्वं यच्चापि मां प्रति ।

8. उपयाति समृद्धार्थः सह मित्रैर्महाबलैः ।

9. ज्ञेयाश्च सर्वे वृत्तान्ता भरतस्येङ्गितानि च ।
यावन्न दूरं याताः स्म क्षिप्रं आगन्तुमर्हसि ।

10. निहत्य रावणं रामः प्रतिलभ्य च मैथिलीम् ।
उपयाति समृद्धार्थः सहमित्रैर्महाबलैः ।

11. ततो हर्षसमुद्भूतो निःस्वनो दिवमस्पृशत् ।
स्त्री बालयुववृद्धानां रामोऽयमिति कीर्तिते ।

12. त्वमस्माकं चतुर्णां तु भ्राता सुग्रीव पञ्चमः ।
सौहार्दाज्जायते मित्रमपकारोऽरिलक्षणम् ।

13. एतत्ते रक्षितं राजन् राज्यं निर्यातितं मया ।
अद्य जन्म कृतार्थं मे संवृत्तश्च मनोरथः ।

14. अवेक्षतां भवान्कोशं कोष्ठागारं पुरं बलम् ।
भवतस्तेजसा सर्वं कृतं त्रिगुणं मया ।

15. पूजिता मामिका माता दत्तं राज्यमिदं मम ।
तद्ददामि पुनस्तुभ्यं यथा त्वमददा मम ।

16. ततो वानरपत्नीनां सर्वासामेव शोभनम् ।
चकार यत्नात्कौसल्या प्रहृष्टा पुत्रलालसा ।

17. रामं रत्नमये पीठे सहसीतं न्यवेशयत् ।

18. प्रदेहि सुभगे हारं यस्य तुष्टाऽसि भामिनि ।
पौरुषं विक्रमो बुद्धिर्यस्मिन्नेतानि सर्वशः ।

19. ददौ सा वायुपुत्राय तं हारमसितेक्षणा ।
हनुमांस्तेन हारेण शुशुभे वानरर्षभः ।

அத். 41. [உத்தர கா. 1—17, 40

1. सधनुस्त्वं हि लोकान् स्त्रीन्विजयेथा न संशयः ।
दिष्ट्या त्वया हतो राम रावणो राक्षसेश्वरः ।

2. लङ्का नाम पुरी रम्या निर्मिता विश्वकर्मणा ।
राक्षसानां निवासार्थं यथेन्द्रस्यामरावती ।
तत्र त्वं वस भद्रं ते लङ्कायां नात्र संशयः ।
राक्षसैः सा परित्यक्ता पुरा विष्णुभयार्दितैः ।

3. सत्यं ते प्रतिजानामि भ्रातृतुल्योऽधिकोऽपि वा ।
भविष्याम्योजसा चैव संतापं त्यज हृद्गतम् ।

4. विचेशो गुरुरस्माकं नार्हसे वक्तुमीदृशम् ।

5. किमिदं वर्तसे भद्रे वृत्तं यौवनस्य ते ।
न हि युक्ता तवैतस्य रूपस्य तपसः क्रिया ।
रूपं तेऽनुपमं भीरु कामोन्मादकरं नृणाम् ।

न युक्तं तपसि स्थातुं निर्गतो ह्येष निर्णयः ।
कस्यासि किमिदं भद्रे कश्च भर्ता वरानने ।
येन संभुज्यसे भीरु स नरः पुण्यभाग् भुवि ।

6. यस्मात्तु धर्षिता चाहं त्वया पापात्मना वने ।
तस्मात्तव वधार्थं हि समुत्पत्स्ये ह्यहं पुनः ।

7. एकैकस्योपकारस्य प्राणान्दास्यामि ते कपे ।
शेषस्येहोपकारस्य भवाम ऋणिनो वयम् ।
नरः प्रत्युपकारार्थी आपत्स्वायाति पात्रताम् ।

அத். 42. [உத் கா. 41—49

1. सीतामादाय हस्तेन मधु मैरेयिकं शुचि ।
पाययामास काकुत्स्थः शचीमिव पुरन्दरः ।

2. तपोवनानि पुण्यानि द्रष्टुमिच्छामि राघव
एष मे परमः कामो यन्मूलफलभोजिनाम् ।
अप्येकरात्रं काकुत्स्थ निवसेयं तपोवने ।

3. मामाश्रितानि कान्याहुः पौरजानपदा जनाः ।
किं च सीतां समाश्रित्य भरतं किं च लक्ष्मणम् ।

4. दुष्करं कृतवान्रामः समुद्रे सेतुबन्धनम् ।
अश्रुतं पूर्वकैः कैश्चिद्देवैरपि सदानवैः ।
.... .... .... .... .... .... .... .... .... ....
.... .... .... .... .... .... .... .... .... ....
कीदृशं हृदये तस्य सीतासंभोगजं सुखम् ।

अङ्कमारोप्य तु पुरा रावणेन बलाद्धृताम् ।
अस्माकमपि दारेषु सहनीयं भविष्यति ।
यथा हि कुरुते राजा प्रजा तमनुवर्तते ।

5. अप्यहं जीवितं जह्यां युष्मान्वा पुरुषर्षभाः ।
अपवादभयाद्भीतः किं पुनर्जनकात्मजाम् ।

6. श्वस्त्वं प्रभाते सौमित्रे सुमन्त्राधिष्ठितं रथम् ।
आरुह्य सीतामारोप्य विषयान्ते समुत्सृज ।
न चास्मिन्प्रतिवक्तव्यः सीतां प्रति कथंचन ।
तस्मात्त्वं गच्छ सौमित्रे नात्र कार्या विचारणा ।

7. पूर्वमुक्तोऽहं अनया गङ्गातीरेऽहमाश्रमान् ।
पश्येयमिति तस्याश्च कामः संवर्त्यतामयम् ।

8. त्वया किल एष नृपतिः वरं वै याचितः प्रभुः ।
नृपेण च प्रज्ञातमाज्ञप्तश्चाश्रमं प्रति ।

9. कश्चिद्विनाकृतस्तेन द्विरात्रं शोकमागतः ।
…………………………………………
…………………………………………
तत्र चैकां निशामुष्य यास्यामस्तां पुरीं पुनः ।

10. श्रुत्वा परिषदो मध्ये ह्यपवादं सुदारुणम् ।
पुरे जनपदे चैव त्वत्कृते जनकात्मजे ।
…………………………………………
…………………………………………
पौरापवादभीतेन ग्राह्यं देवि नान्यथा ।

11. मामिकेयं तनुर्नूनं सृष्टा दुःखाय लक्ष्मण ।
धात्रा यस्यास्तथा मेऽद्य दुःखमूर्तिः प्रदृश्यते ।
किं नु पापं कृतं पूर्वं को वा दारैर्वियोजितः ।

12. सा कथं ह्याश्रमे वत्स्यामि विजनीकृता ।
आख्यास्यामि च कस्याहं दुःखं दुःखपरायणा ।
किं नु वक्ष्यामि मुनिषु कर्म वा सत्कृतं च किम् ।
कस्मिंश्चित् कारणे त्यक्ता राघवेण महात्मना ।

13. अहं त्यक्ता त्वया वीर अयशोभीरुणा वने ।
यच्च ते वचनीयं स्यादपवादसमुत्थितम् ।
मया हि परिहर्तव्यं त्वं हि मे परमा गतिः ।

14. जनकस्य सुता राज्ञः स्वागतं ते पतिव्रते ।
अपापां वेद्मि सीते त्वां तपोलब्धेन चक्षुषा ।
विस्रब्धा भव वैदेहि सांप्रतं मयि वर्तते ।

அங். 43 [உத். கா. 50, 71, 93—98

1. व्यक्तं दैवादहं मन्ये राघवस्य विनाभवम् ।
वैदेह्या सारथे नित्यं दैवं हि दुरतिक्रमम् ।

2. को नु धर्माश्रयः सूत कर्मण्यस्मिन्यशोहरे ।
मैथिलीं प्रति संप्राप्तः पौरैर्हीनार्थवादिभिः ।

3. रावणस्य वधो घोरो यत्नेन महता कृतः ।
इदं तु सुमहत्कर्म त्वया कृतमयत्नतः ।

4. नान्यः शब्दोऽभवत्तत्र हयमेधे महात्मनः ।
छन्दतो देहि देहीति यावत्तुष्यन्ति याचकाः ।
5. यदि शब्दापयेत् रामः श्रवणाय महीपतिः ।
ऋषीणामुपविष्टानां ततो गेयं प्रवर्तताम् ।
..................................................
..................................................
लोभश्चापि न कर्तव्यः स्वल्पोऽपि धनकाङ्क्षया ।
किं धनेन आश्रमस्थानां फलमूलोपजीविनाम् ।
6. यदि पृच्छेत्स काकुत्स्थो युवां कस्येति दारकौ ।
आवां वाल्मीकिशिष्यौ स्वो ब्रूतमेवं नराधिपम् ।
7. जटिलौ यदि न स्यातां न वल्कलधरौ यदि ।
विशेषं नाधिगच्छामो गायतो राघवस्य च ।
8. वन्येन फलमूलेन निरतौ वनवासिनौ ।
सुवर्णेन हिरण्येन किं करिष्यावहे वने ।
9. यदि शुद्ध समाचारा यदि वा वीतकल्मषा ।
करोत्विहात्मनः शुद्धिं अनुमान्य महामुनिम् ।
छन्दं मुनेश्च विज्ञाय सीतायाश्च मनोगतम् ।
प्रत्ययं दातुकामायास्ततः शंसत मे लघु ।
श्वः प्रभाते तु शपथं मैथिली जनकात्मजा ।
करोतु परिषन्मध्ये शोधनार्थं ममैव च ।
10. इयं दाशरथे सीता सुव्रता धर्मचारिणी ।
अपवादैः परित्यक्ता ममाश्रमसमीपतः ।

लोकापवादभीतस्य तव राम महाव्रत ।
प्रत्ययं दास्यते सीता तदनुज्ञातुमर्हसि ।

11. इमौ तु जानकीपुत्रौ उभौ च यमजातकौ ।
सुतौ तवैव दुर्धर्षौ सत्यमेतद्ब्रवीमि ते ।

12. बहुवर्षसहस्राणि तपश्चर्या मया कृता ।
नोपाश्नीयां फलं तस्या दुष्टेयं यदि मैथिली ।

13. इमं शुद्धसमाचारा अपापा पतिदेवता ।
लोकापवादभीतस्य प्रत्ययं तव दास्यति ।

14. सेयं लोकभयाद् ब्रह्मन्न पापेत्यभिजानता ।
परित्यक्ता मया सीता तद्भवान् क्षन्तुमर्हति ।

15. जानामि चेमौ पुत्रौ मे यमजातौ कुशीलवौ ।
शुद्धायां जगतो मध्ये मैथिल्यां प्रीतिरस्तु मे ।

16. यथाऽहं राघवादन्यं मनसापि न चिन्तये ।
तथा मे माधवी देवी विवरं दातुमर्हति ।
मनसा कर्मणा वाचा यथा रामं समर्चये ।
तथा मे माधवी देवी विवरं दातुमर्हति ।
यथैतत्सत्ययुक्तं मे वेद्मि रामात्परं न च ।
तथा मे माधवी देवी विवरं दातुमर्हति ।

17. काव्यं रामायणं कृत्स्नं सीतायाश्चरितं महत् ।

---